# विश्वकर्मकृतायां वास्तुशास्त्रे वास्तुविद्याम्

श्री सरस्वत्यै नमः श्रीगणेशाय नमः श्रीविश्वकर्मणे नमः

श्री विश्वकर्माकृतायां वास्तुशास्त्रे वास्तुविद्यां पूर्वार्ध

आयादिगणिताध्याय प्रथमोऽध्याय १

श्री विश्वकर्मा उवाच
अथातः संप्रवक्ष्यामि आयादिनां लक्षणे
प्रासादनिलये पुरे वापि प्राकर मंडपे १
वास्तु कर्मेषु सर्वेषु आयादिगणित योजयेत्
इदानीं कथयिष्यामि गणितवास्तुकर्मके २

१ आय

आयत्वं च पृथुत्वे न गुणयेदाकर्मणि
अष्टाभिर्हरेत्भाग यत्शेषं आयादिशु ३
ध्वजाधूमस्तथा सिंह श्वानोवृषखरौगज
ध्वाक्षं चैव समं दृष्ट्वा प्रार्व्यादिषु प्रदक्षिणे ४
ध्वजो सिंहो वृषो गजो शश्यतेश्रुभवेश्मशु
अधमानं खरोध्वांक्षो धूमश्वानःसुखावहा ५
प्रासाद प्रतिमालिङ्गे जगती पीठमंडपे
वेदी कुंडेशुचि चैव पताकाछत्र ध्वजादेय ६
अग्निकर्मषु सर्वेषु होमशाला महानसे
थूमोऽग्निकुंडसंस्थाने होमकर्मगृहेऽपि च ७
आयुधेषु समस्तेषु नृपाणां भवनेषु च
नृपासने सिंहद्वारे सिंहतत्र निवेशयेत् ८
श्वानोम्लेच्छं गृहे प्रोक्तो वेश्यागारे नटस्य च
नृत्यकारेषु सर्वेषु श्वानःश्वानोपजीविनाम् ९
वणिजकर्मषु सर्वेषु भोजनपात्रेषु मंडपे
वृषास्तुरङ्गशालानां गौशालागोकुलेषु च १०
तत् वितघ्नादिस्वरे वाजित्रे विविधे तथा

कुलालरजाकादिका खरो गर्दभोपजीविनाम् ११
गजश्च गजशालायां सिंहयत्नेन वर्जयेत्
सिंहासने गजं देयं यानस्याय गृहेषु च १२
मठेषु यंत्रशालासु जिनशालादिकेषु च
ध्वांक्षं चैव प्रदातव्यं शिल्पकर्मो प्रजीविनाम् १३
वृषस्थाने गजं दद्यात् सिंहवृषमहस्तिनौ
ध्वज सर्वेषु दातव्यं वृषो नान्यत्र दीयते १४
प्रासादे मंडपे बाह्ये गृहे भित्तिस्तु मध्यत १५

आय स्वरूप

यथानामा तथामुखा ध्वजनर ध्वांक्षकाकरूपकं
मुखैः स्वनामा सदशाः नराकार करोदरा १६
हस्तभ्यां तदूरुपाढ्या पादाभ्यां विहंगाकृते
सर्वेषां सिंहवक्षीवा प्रबलाश्च महोकटा १७

२ नक्षत्रा

फले चाष्टगुपो तस्मिन् सप्ताविंशति भाजित
यदच्छेषं लभते तत्र नक्षत्र तद्गृहेषु य १८

३ गण

पुनर्वसुश्विनी पुष्य मृगश्रवणरेवती
स्वाति हस्तानुराधाय एतेदेवगणाःस्मृता १९
भरणी रोहिणि आर्द्रा पूर्वाणि तृतीयं तथा
उत्तरात्रयं श्रैव नवैते मानुषागणा २०
विशाखा कृतिकाश्लेषा मघा च शतभिषास्तथा
चित्रा ज्येष्ठाधनीष्ठा च मूल एते च राक्षसा २१
स्वगणे चोत्तमा प्रीति मध्ये मानवराक्षसा
कलहो देवदैत्यानां मृत्युमानवराक्षसै २२

४ चंद्र

कृतिकाद्या सप्त सप्त पूर्वादिषु प्रदक्षिणे
अष्टाविंशति ऋक्षाणी ततः चंद्रमुदियते २३
अग्रतो हरते आयु पृष्ठतो हरतेधन
वामदक्षिणातो चंद्रो धनधान्यकरस्मृता २४
प्रासादे रात्रवेश्मेषु चंद्रो दद्यात् अग्रतो
अन्येषां च न दातव्यं श्रीमंतादि गृहेषु च २५

५ व्यय

नक्षत्रं वसुभिर्भक्त यच्छेषं व्ययो भवेन
समव्ययः पिशाच राक्षसस्य व्ययोऽधिकं २६
व्ययन्यूनो नरोऋक्षो धनंधान्यकर स्मृता

६ अशंक

मूलराशी व्ययक्षिप्यं गृहनामाक्षराणि च २७
त्रिभिरेव हरेद्भागे यच्छेषं तदंशकम्
इंद्रो यमश्च राजानां अंशके क्रमेण तु २८
प्रमाणं त्रिविधोत्कर्तव्या ज्येष्ठ मध्यम कन्यस

७ तारा

गणयेत्स्वामि नक्षत्रं यावदक्षं गृहस्य च २९
नवभिश्च हरेत्भागं शेषं तारा प्रकीर्तिता
ताराषटश्रुभाप्रोक्ताद्येकाद्विचतुषडाष्टनवके ३०
त्रिपंच सप्तभिश्चैव एमितारा विवर्जिता ३१

इति श्री विश्वकर्माकृतायां वास्तुशास्त्रे वास्तुविद्याय
आयादिगणिताध्याय प्रथमोऽध्याय क्रमांक १ पूर्वार्ध

श्री विश्वकर्माकृते वास्तुविद्यायां वास्तुशास्त्रे क्रमांक
द्वितीयोऽध्याय २
ग्रंथपूर्ति

वास्तुप्रारंभ

शुभ लग्ने शुभ नक्षत्रे पंचग्रह बलान्विते
मास संक्रांतिवत्सादि निषिद्धकाल वर्जिते १

भूमिपरीक्षा

सर्वदिक्षुप्रवाहो वा प्रागुदक्शंकरप्लवा
केशांगाराकाष्टलोहास्थिक्रान्त शोधयेत् भूमि २
पाषाणान्ते जलान्तवा वालुकान्नखनेन्त भूमि
दिग्शुद्धिकृते वास्तु पुरप्रासाद मंदिर ३
पंचवानवाशिला मध्ये कर्मशिला स्थापयेत्
एक हस्ते तु प्रासादे शिलो वेदांङ्गुलो भवेत् ४
षडांङ्गुला द्विहस्ते च त्रिहस्ते च ग्रहाङ्गुला
चतुहस्तेय प्रासादे शिलास्याद द्वादशाम् ५
ततोऽपरेष्ट हस्तांते वृद्धिवेदाङ्गुलो भवेत्
पुनः त्र्यंगुलातो वृद्धि पंचाश हस्तकावधि ६
पादेन चोच्छिता शस्तातां कुर्याद् पंकजान्वितम्
दिग्पाल क्षेत्रपाल गणेशचंडीका वास्तौ ७
एतेषां विधिवत्पूजा कृत्वा कर्मसमारभेत्
शिलाधः नागकूर्मोपरिकुभ स्थापयेत् ८
एक हस्तादिप्रासादाद् यावद् हस्तशतार्धकम्
प्रमाणां कुंभकेमुले नासिकेभित्ति बाह्यते ९
त्रिपंचसप्तनवोभि फलनाभिर्विभाजितम्
प्रासादस्याङ्गसंख्या च वारिमार्गान्तरस्थिता १०

इति विश्वकर्माकृते वासुविद्यायां वास्तुशास्त्रे वास्तुप्रारंभाशिला स्थापना ध्याय द्वितीयोऽध्याय २

श्री विश्वकर्माकृतायां वास्तुविद्यायां जगती लक्षणाध्याय

क्रमाक ३

विश्वकर्मा उवाच
अ्रतः ऊर्ध्वप्रवक्ष्यामि जगत्यां लक्षण परम्
ये नैव कृतमात्रेण सर्वश्रेय समाप्नुयात् १
प्रासाद विस्तर तुल्य प्रासादार्धं प्रमाणतः
पादोनं वाथ कर्तव्यं सार्धवाथ प्रयोजयेत् २
द्विगुणं वाथ कर्तव्यं सोपानायाम कीर्तितः
शुण्डकासु च विज्ञेयं तत्पादे गण्ड विस्तरम् ३
द्वितीयं तत्समं ज्ञेयं शुण्डकोभयतः स्थिता
प्रासादार्धसमं ज्ञेयं जगतीभद्रनिर्गमम् ४
पादोनं वाथ कर्तव्यं प्रासादस्य समं ततः
भद्रनिर्गम तुल्यं तु जगतीगण्डनिर्गमम् ५
द्वितीयं तत्समं कार्य प्रतीहारास्तदग्रतः
मूलनायकं यन्मानं तन्मानात्पादवर्जितम् ६

ऊर्ध्वोदयलक्षणम्

जगत्योदय संग्राह्या चतुर्दश विभाजितम्
प्रथमे चतुरश्रे तु सार्ध्वभागसमुच्छ्रयम् ७
द्वितीयं तत्समं कार्यं तृतीयं तत्प्रमाणतः
चिप्पिका ऊर्ध्वमेकेन भागमेकेन कुंभकम् ८
भागार्धे खुरकं ज्ञेयं पादोनं जाडयकुंभकम्
भागार्धे कर्णकं कुर्यात् पादोनंतरपत्रिका ९
भागार्धं खुरकं कार्यं सार्धं भागं तु कुंभकम्
पादोनभागमुत्सेधं कलशं कुर्याद्विचक्षणः १०
भागार्धे नान्तरपत्रं पादोनं च कपोतिका
रूपकण्ठं च भागेन निर्गमं तु त्रिभागिकम् ११
एतेन कथितं सर्वं जगतीनां समुच्छ्रयम्

तथाहं कथयामिति तव पुत्र यथार्थतः १२
राजसेनो धरेनाम अर्धभाग प्रमाणतः
सार्धभाग समुच्छ्रेया पत्रयुक्तं सुवेदिका १३
आसनपट्टमानं तु अर्धभागं च सङ्ख्यया
विस्तारं च द्विभिर्भागैः पादयुक्ताश्च कारयेत् १४
मत्तवारणकं चैव सार्धभागसमुच्छ्रयम्
तस्योदयंश्च त्रिभागेन पिण्डं कुर्याद्विचक्षणः १५
पादोन कायेत् पिण्डश्च न न्यूना न ततोधिका
अथ प्रासादमानेन कन्यसे चैव चोच्यते १६
अर्धेन कोणधामानि चतुःकोणेन दापयेत्
वामे गणाधिपत्यं च दक्षिणे पार्वती स्मृता १७
नैर्ॠत्ये भास्करं विद्यात् वायव्ये च जनार्दनम्
मातृभिर्मातरस्थाने दक्षिणं दिशमाश्रितम् १८
पश्चिमांजलशेनस्तु सौम्यायां अश्ववाहनम्
स्थात्पथि चैव कर्तव्यं ईशान्यां देवतालयम् १९
प्रासादस्योत्तरे कार्यं गृहं चन्द्रस्य चोत्तमम्
चतुरश्रं च वृत्तं वा वलभ्याकृतिमुत्तमम् २०
अर्धभागे त्रिपादे वा यथा वाध्यान जायते
तथावै कार्य्येत्प्राज्ञः जगत्यां मध्यसंस्थितम् २१
चारुसिंहासनासीनं नीलमेघाञ्जन प्रभम्
ऊर्ध्वे चक्रं सुते जाढ्यं पिवंतं स्नपन सदा २२
टंकऽपाणि महाचण्डं प्रणालाधो व्यवस्थितम्
इदृशं कारयेच्चण्डं सर्वकामफलप्रदम् २३
स्वयं बाणलिङ्गे च स्थण्डिले मण्डलेपि वा
अद्वैतमन्त्रसंयुक्ते चले चण्डेन विद्यते २४
रोहलिङ्गे स्वयम्भूबाणलिङ्गे सवेदिका

इतरे च जगत्यायां चले चराडेन विद्यते २५
बाण रोहे चले सिद्धे न चराडाय स्वयम्भूवा
प्रतिमानां च सर्वेषां अद्वैते स्थरिडलेन हि २६

नंदिमंडप

वृषभं तोरणं चैव तथा वै नृत्यमराडपम्
प्रासादाग्रे प्रकर्तव्यं सर्वशोभा समन्वितम् २७
अनन्तरं च त्रिभागेन चतुर्थांशेन चोत्तमम्
भूतांशेन तु कर्तव्यं द्वितीयं नृत्यमराडपं २८
जगत्यायाम गर्भं तु गर्भं वै मराडपस्य च
तत्समानः प्रतीहारा द्वारे च वामदक्षिणे
नामानि च प्रवक्ष्यामि यथोक्तानि स्वयंभुवा २९
जगती चतुर्मुखा नामः महाकालं च वामतः
दक्षिणे तु भवेन्नंदी सर्वविघ्नविनाशन ३०
याम्या यां च स्मृतं द्वारं भृंगौ वामौ विनिर्दिशेत्
हेरंबो दक्षिणे कुर्यात् द्वारदो विघ्ननाशन ३१
पश्चिमायां दिशां वामे दुर्मुखो पाराडुरो भवेत्
सौम्यायां च दिशां वत्स सितो वामेऽसितोत्तरे ३२
चत्वारि द्वारः विख्यातां जगत्यां रूपदायकाः
देव्यांश्च दिग्पालांश्च यथा स्थानतः शृणु ३३
पूर्वायां स्थापयेत् शक्रं अग्नौ चैवाग्नि गोचरे
यमं वै दक्षिणे भागे राक्षसान्नैर्ऋति तथा ३४
वरुणे पश्चिमायां तु वायव्यां वायुदेवता
घनदं सोम दिग्भागे ईशान्याभीश देवता ३५
प्रासाद पृष्टि भद्रे तु जगत्यां याः कुमारिकाः
वामे च दक्षिणे चैव सप्तमातृ विनिर्दिशेत् ३६
जगती देवदेवस्य शृणु विष्णोर्यथा स्थिता ३७

आग्नेयां स्थापयेन्नित्यं मुदकन्तं विनायकम्
याम्यां वामनं रूपं नारसिंहं च नैऋते ३८
वायव्ये क्रोड रूपं च जलशयनः वारुणे
कौबेरे बालक्रीडा च ईशाने मधुनाशनम् ३९
एवं विष्णुं भवेज्जगती सूर्यस्य शृणु सांप्रतः
शिखीस्थाने कुजं स्थाप्यं गुरुं वामे प्रतिष्ठयो ४०
चन्द्रपुत्रं तु नैर्ऋत्ये शुक्रं च वारुणे न्यसेत्
रविपुत्रं तु वायव्ये सोमे सोमं च स्थापयेत् ४१
राहु च शंकरे स्थाप्य स्थाप्यता वरदा भवेत्
सुमित्रस्य भवेद् ह्येवं देवद्रोणे सुखावहा ४२
अन्यथा कुरुते यस्तु सोपिकुर्य्याशिवेन्यथा
चण्डिकायां प्रवक्ष्यामि शृणु संक्षेपलक्षणम् ४३
विघ्नेशमग्निदेशे च मातृहर्म्यं च दक्षिणे
चामुण्डा नैर्ऋते भागे मिश्रादेवी तु पश्चिमे ४४
लक्ष्मी च वायव्ये स्थाप्य भद्रकाली च सौम्यगा
ऐशान्यां कालरात्री च सर्वकार्यार्थसाधिनी ४५
एवं तु स्थापयेद्देव्यः सर्वसिद्धकरःशुभा

जिनविहारम्

अथजिन विहार कथयाम्यहम्
विहारं यादृशं प्रोक्त तादृशं कथयाम्यहम् ४६
मध्ये स्थाप्यं बुधजीन् श्रीमान् अग्रे चित्रेण भूषिता
ताराहर्म्यं समोपेत यक्षवृंदगणान्वितम् ४७
एक भौम द्विभौमं वा त्रिभुयो कास्योरये
चित्रशाला समोपेतं उपवर्णसंकुलम् ४८
विहार एवमेवं च श्रीमुचान्य जिनालयम्
रिष्टनेम्ययतः कृत्वा ऋषभं च नियोजयेत्

चतुर्विंशती देवानि एकमेकं प्रतिष्ठयेत् ५०
यक्षैर्गणधरैर्दिव्यैः देवतैश्च विशेषतः
नानारूपकसंयुक्ता जगती कारयेत् शुभा ५१
प्रासादे मण्डपं कुर्यात् त्रिकं च तदनन्तरम्
अग्रं वलाणकं कार्यं द्विभूमं च त्रिणीस्तथा ५२
सप्त दश देवकुलीः स्थाप्या वामदक्षिणतः
त्रिकस्य पार्श्वयोश्चैव नवपृष्ट ष्टयोगयेन ५३
द्विपञ्चाश तथा कार्या प्रदक्षिण क्रमेण तु
जिनस्याग्रे प्रदातव्यं समोवसरणं तथा ५४
अपूर्ण ५५

इति श्री विश्वकर्माकृत्तायां वास्तुशास्त्रे वास्तुविद्यायां जगती लक्षणाधिकारे क्रमांक तृतीयोऽध्यायः ३

## श्री विश्वकर्माकृते वास्तुविद्यायां वास्तुशास्त्रे भिट्टपीठ लक्षणाध्याय क्रमांक अध्याय ४

### भिट्टमान

अतिस्थूलासु विस्तीर्णा प्रासाद घरणीशीला
अति सुद्रढकार्या इष्टिका चूर्णवारिभिः १
शिलोपटि भवेद्भिट्टमेकहस्ते युजाङ्कुलम्
अर्धांगुला भवेदवृयविद् हस्तशतार्धकम् २
एकद्वित्रिणि भिट्टानि हीनाहीनानि कारयेत्
स्वस्योदयप्रमाणस्य चतुर्थांशेन निर्गमं ३

### पीठमान

अथातः संप्रवक्ष्यामि प्रासादपीठमानतम्
एकहस्तेषु प्रासादे पीठं च द्वादशांगुलम् ४
हस्ताद्विपंचपर्यंत हस्तेहस्ते पंवाङ्कुलम्

पंयोर्ध्व दशयावत् वृद्धि वेदाङ्कलं भवेत् ५
दशोर्ध्व विशपर्यंतं हस्ते चैवाङ्कलं त्रयं
विशोर्ध्व षट् त्रिंशति कर वृद्धद्वयाङ्कलम् ६
अतःऊर्ध्व शतार्धेन हरतेहरतैकमंङ्गुलम्
अर्धमाने त्रिभाजे वा पीठ चैव नियोजयेत् ७
स्थानमानाश्रयं ज्ञात्वा तत्र दोषो न विद्यते

प्रथम पीठं भाग

पीठस्यायोछ्रयो ज्ञात्वा भागं वक्ष्यामि तत्वतः
चत्वारिंशद्विभिश्चास्य ऊर्ध्वभागा विभाजिते ८
अष्टभागैर्भवेध्वत्स । जाडयकुम्भं द्विजोत्तम
कर्णं सार्ध विभागं तु भागार्ध चान्तरपत्रकम् ९
सार्ध पंचाभिमानं स्कंधकुर्याद्वियक्षणाम्
पट्टिकाचार्ध भागं तु चाष्टभागाश्य निर्गमम् १०
कर्णालिकां ततः कुर्यात् भागै चैव चतुर्दशम्
कर्णं सार्धं यं ज्ञेयं भागार्ध चांतरपदम् ११
चिप्पिका भागमेकं तु चान्तरपदं द्विभागिकः
सार्धद्विभागिका कार्या कपोतालिस्तु शोभना १२
भागार्धं तत्र मध्ये तु स्कन्धं चान्तरपत्रिका
ग्रासश्च पद्विका कुर्यात् सार्धपञ्चस्तु उन्नत १३
अतो भागार्ध मध्ये तु चिप्पिका दलशोभना
षड्भागास्य भवेत् वत्स निर्गमं तु कणालिका १४
चिप्पिका भागमेकं तु कपोतालिर्द्विभागिका
चिप्पिका तत्समा प्रोक्ता त्रिभागं कणकं भवेत् १५
अतन्मेतवमाद्दयान्तं कणालिका प्रमाणकम्
गजपीठं च वक्ष्यामि भागैर्युक्तं च द्वादशै १६
पट्टिका अन्तरपत्रं तु भागार्ध चारु शोभना

कर्णं च भागमेकं च भागार्ध स्कंधपट्टिका १७
सार्धचाष्टो समाख्याता गजाःभागेस्तु शोभना
कपोतालिश्च कर्णं च भागमेकं सुविस्तृतम् १८
भागार्ध स्कंधपट्टिस्तु त्रिणिभागस्तु निर्गमः
नरपीठं पीठ मध्यैः भागैश्चाष्टैः समन्वितः १९
चिप्पिकान्तर पत्रः भागमेकं च कारयेत्
रूपाणि षट्सार्धेन अर्ध स्कन्धं च पट्टिका २०
एतन्मेवतमं वत्स द्विभागाश्चैव निर्गमे
पीठमानो समादिष्ट प्रासादमान समन्वितम् २१

द्वितीय पीठम्

शतार्द्धत्रीणि संयुक्ता पीठभागं च मध्यमे
नवभिर्जाडयकुम्भं च निर्गमं चाष्टभागिकम् २२
कणालिका प्रकर्तव्या भागैश्चैव चतुर्दश
षड्भिस्तु निर्गमे कुर्यात् गजाश्चैव त्रयोदशैः २३
निर्गमे त्रीणि भागानि नवभिरश्वपीठकम्
निर्गमे त्रीणि विज्ञेया वसुभिर्नरपीठकम् २४
द्वौ भागौ निर्गमे तस्य मध्यपीठं अयंविधि

तृतीय पीठम्

उत्तमं संप्रवक्ष्यामि षष्टिभागैर्विभाजिते २५
वसुभिर्जाडयकुम्भं तु निर्गमं तु तदेव हि
मनुसङ्ख्या कणाली च निर्गमे ऋतुभागिकाः २६
त्रयोदशैर्गजाज्ञेया निर्गमे त्रीणिमेव च
नंदस्या सङ्ख्या भवेदश्वा त्रीणि निर्गममेव च २७
नराणां मातराणां च अष्टवाष्टो प्रकल्पयेत्
द्वौ द्वौ निर्गमे ताभ्यां ज्येष्ठपीठ अयं विधौ २८

चतुर्थ पीठम्

चतुर्थ कन्यसं पीठं प्रासादस्यानुरूपतः २९
पञ्चमे षष्टमे भागे सप्तमे चाष्टमेव च ३०
पीठं चैव प्रकर्तव्य अत ऊर्ध्वं न कारयेत्
अष्टभिर्जाडयकुम्भं च निर्गमे वसुभार्णिकम् ३०
मनुसङ्ख्य कणाली च निर्गमे ऋतुसङ्ख्यया
एवं कृते भवेतसिद्धिं कर्तुं काशपकः सदा ३१

कनीयसपीठाङ्गोपाङ्गानि

भागार्धं घसिका कार्या पादोन कर्णकं द्वयम्
पञ्च भागोच्छ्रितं स्कन्धं पादोनं चैव चिप्पिका ३२
चाष्टभाग समुच्छ्रयं जाडयकुम्भं सुशोभनम्
निर्गमं चाष्टाभिर्भागै अतोदूर्ध्वं च कणालिका ३३
भागार्धा घसिका कार्या कणकं सार्धद्विमुच्छ्रयम्
चिप्पिका भागमेकं तु द्वितीयान्तरपत्रिकाम् ३४
सपादस्कन्ध द्वयं स्यात् पादोनं कर्णमुच्यते
पादोनं स्कन्धचोच्छ्रायं घसिका भाग पादकः ३५
सार्ध त्रयोच्छ्रिता कार्या ग्रासपृट्टी सुशोभना
पादोनं कर्णमुच्छ्रेयं पादोन चैव चिप्पिका ३६
चतुर्दशै समुच्छ्रेयं कर्णमालि सुशोभना इतिकामदपीठ
षट्भागं भवेत्वत्स निर्गमं च कणालिका ३७

कर्णपीठ

चिप्पिका भागमेकेन कर्णद्विसार्धभागम्
घसिकार्ध भागेन प्रोक्तस्कंधत्रिभागम् ३८
कर्णकद्वीभागेन चाष्टभागं कर्षापीठकम्
एतेने तत्रमाख्याता कर्णपीठ सुशोभना इति कर्णपीठ ३९

देवप्रासादपीठादेयम्

पीठं चत्वारि उक्तानि प्रासादेषु च कारयेत्

शिवे च ब्रह्मणे चैव विष्णुना च रवैस्तथा ४०
बौद्धे जैनै च कर्तव्या पीठा चत्वारि शोभना
यक्षं च चण्डी तथा दुर्गा गौरी गणपतिस्तथा ४१
महालक्ष्मीस्तथा स्कन्दे योगिनीनां तथैव च
पीठानि कार्येन्नित्यं प्रासादेषु च सर्वेषु
इदस्यं कुरुते यस्तु सर्वकामफलं लभेत ४२

देवपीठ विभाग

ऊच्छयेयत्र पीठस्य त्रिशता परिभाजिते
एकांशभूगतं कार्यं त्रिभागः कण्ठपीठिका ४३
भागार्ध मुखपट्ट च स्कंधः साध्र्वत्रयोन्नत
स्कंधस्य पट्टिका वै स्याद् भागार्ध चान्तरपत्रिका ४४
कर्णः सार्द्धद्वयं वै स्याद् भागैकं चिप्पिकामत
द्विभागं चान्तरपत्रकं कपोताली द्विसार्द्धिका ४५
सार्द्धपंचग्रासपदि कर्तव्याविधिपूर्वकम्
अर्धे मुखपट्टिकाख्या त्रिभागं कर्णशोभनम् ४६
अर्धः स्कंधपट्टि कार्या चतुर्भागश्च स्कंधकः
क्षोभणश्चाष्टभागैः कर्तव्य तदशंकितैः इति देवपीठ ४७

दोषफलम्

मानहीनं न कर्तव्य मानाधिक्यं न कारयेत्
मानहीने कुलोच्छेदं स्थापकस्य तदाभवेत् ४८
स्थापकस्या भवेद्दोषं नरके पतनं ध्रुवम्
शिल्पीनो निष्कुलं यान्ति मानहीने कृतेन तु ४९
मानाधिक्ये कृते चैव राष्ट्रभङ्ग भयंभवेत्
न दोषः स्थापकश्चैव यजमानस्य विद्यते ५०
अन्य च कुरुतेयस्तु शिल्पीदोष भवाप्नुयात्
इति श्री विश्वकर्माकृतायां वास्तुविद्यायां वास्तुशास्त्रे भिट्टपीठ

## प्रमाणलक्षणाध्याय क्रमांक ४

## श्री विश्वकर्माकृते वास्तुविद्यायां प्रासाद कटयोच्छ्रय लक्षणां क्रमांक अध्याय ५

मंडोवर प्रासादोदयमान
अथातः संप्रवक्ष्यामि प्रासादस्य तु लक्षणम्
प्रासादस्य तु यन्मानं ज्ञातव्यं मूलनासके १
अंगुलानि ततो ज्ञात्वा दशभागे विभाजित
एकहस्तं द्विहस्तं वा कूर्यात्तय समोदयं २
त्रिचतुःपंच हस्तं तु नवभागोदये स्मृतं
षट् सप्तहस्तके चैव अष्टभागमुच्छ्रयं ३
नवाष्टकेषु प्रासादे सप्तसार्ध्व प्रमाणकं
दशमेकादशैव चैव सप्तभाग समुच्छ्रयं ४
द्वादशे त्रयोदशे च षटसार्धतुकाश्येत्
अतः ऊर्ध्व ततो कुर्यात् द्यान द्विंशस्तु हस्तके ५
षट्भागस्य प्रमाणं तु कर्तव्यं शिल्पीबुध
विशहस्तात्परे ज्ञात्वा यावत्षट्विंशहस्तकं ६
कटयुच्छ्रयं तु कर्तव्य पंचसार्ध्व समुच्छ्रिता
षट् त्रिंशमत कृत्वा यावत्पंचाशहस्तक ७
पंचभाग प्रमाणेन कर्तव्याशिल्पिनोबुधः
घटादौ छाद्यपर्यंत विभक्ति मध्यमध्यया ८
एकभेदा समाख्यान द्वितीयं शृणु सोप्रत
प्रासादयं च मानं च ९
प्रासादमेमुलाना कृत्वा विभजेन्नवभागिकं
एकहस्तद्विहस्तं वा त्रिहस्तं चतुःपंचक १०
अधःपदयोर्ध्व पदंय नवभागं कारयेत्

षट्सप्त हस्त प्रासादे कर्तव्यं चाष्टभागिकं ११
नवचाष्ट हस्तप्रासादे सप्तभागप्रमाणकं
दशमेकादशे पुत्र षट्साध्र्व भागमानक १२
द्वादशे त्रयोदशे ज्ञात्वा पंचसार्धश्च भाजत
अतऊर्ध्वततः कुर्याद्यावद्विंशश्च संख्यया १३
पंचभाग प्रमाणेन कर्तव्या शिल्पिनो बुध
विंशोर्ध्वेत्ततः कुर्याद्यावत्पंचाश हस्तकं १४
तावत्यर्ध कर्तव्ये प्रासादस्यानुमेखला
नवभागप्रमाणेन उच्छ्रये भाग संख्यया १५

शलिलांत्तर

अथातो लक्षणं वक्ष्ये सलिलान्तर निश्चयं
यावद् हस्तप्रमाणेन विस्तारक्रियते कटि १६
तावदङ्गुलमानेन निर्गमं तस्य कारयेत्
निर्गमं पंचमोंऽशेन वारिमार्गान्तरक्षोभना १७
क्षोभयानास्तु पादेन विस्तारतस्य कारयेत्
मद्रार्ध तु ततो वत्स ज्ञातव्यं मूलनासके १८
दशधा भाजितं कृत्वा भागैके मूल नासिक
द्वितीया फालना कार्या पादोनत्रयविस्तृता १९
तृतीया च त्रिभिर्भागैः कर्तव्या नामसंशय
भागार्धनु ततः कार्य सपादचयविस्तृता २०
अनेनैवचभागेन निर्गमंस्याफालना
यावद्हस्तप्रमाणेन कटिमान विधीयते २१
तावदेङ्गुलपास्तु फलादैना तु निर्माम
अनुगेषु तथा प्येयं एव कोणेषु मापयेत् २२

मंडोवर विभाग १७०

अतोर्ध्व चैव कर्तव्यं शतमेकोनसप्तभिः

क्षुनमादो पादपर्यंतः विभक्त भाग योजयेत् २३
एतेश्चैव भाजैस्तु क्षुरकंस्तु क्रतु कल्पयेत्
भागविंश त्रयधिका ततोकुभे भागाश्च कारयेत् २४
अत ऊर्ध्व तु यदिस्तु कुर्याद्भागं पदात्फलं
कलशं दिगभागानि ऊर्ध्वपद्वित्रिपादत २५
अर्धाच्च तेन मानेन अंतरपत्रं तथा शृणु
चत्वारिभाज तो वत्स कर्तव्या शिल्पिनातधः २६
कुमालिका भाग श कथयामि सार्धनव
भागत् कर्णभाग द्वयं कुर्यात् स्कंध द्विभागितं २७
स्कंधोर्ध्व षट्टिका वत्स भागोर्ध कारयेद्बुधः
कर्ण तलै पट्टिका वत्स उभयोर्द्विभागमेव च २७
कर्ण तु भागमेकं तु त्रिभाग स्कंधमित्युक्तं
वर्तनात्तु कुमालिका एवं सार्ध नव भागत् २८
मसुरकं तु वक्ष्यामि भागः सार्धदशेन तु
कर्णकभाग चतुष्केन तन्मध्ये स्कंधपट्टीका २९
कर्णों भागसार्धेनु
स्कंध भागत्रयं अधः पट्टिका अर्धभूषिते ३०
कामरूपवती नाम विन्यसेत्सार्धभागिका
अंतरपत्रं तु विख्यातं भागार्ध च कारयेत् ३१

जंघा

जंघाकायां तथा कार्या च तु चत्वारिंशत्तु भागत्
जंघालथैव कर्तव्या सुरूप्त रूपसंयुत ३२
दिशापालैस्तु सायुक्ता भद्रखत्तक भूषिता
उत्तरे विन्यसेच्चंडी दक्षिणेंडधक भैरव ३३
नाटेश्वरं न्यसेद्भद्रे पश्चिमे नृत्यसंयुतं
अथवा च प्रकर्तव्या देवता त्रय संयुताः ३४

ब्रह्मा दक्षिणे भागे वामे विष्णुः प्रकीर्तित
रुद्रस्तु पश्चिमे भद्रे सर्वसोभाग्य संयुतं ३५
रथिकैश्च विचियेस्तु अनुजेषु च योक्षितो
किं तु संपात कोणेषु मुनिस्तत्र संस्थितेः ३६
सिंहकर्णार्धमुत्सेध भद्रं उद्धम् समुछ्रय
सर्धपादाधिकं चैवा विंशभागाश्च कारयेत् ३७
अंतरपदं तथा भागं कारयेद्विचक्षणा
ग्रासस्थपट्टिका चैव पंच भागस्तु संख्यया ३८
दशभाग उद्गमो वक्ष्ये मध्ये संयोज्यसूनुतुः
कर्णाय पट्टीकायुक्त सार्धभागं तु कारयेत् ३९
सार्ध भाग समाख्याता भरण च निबोधये
कपोताली तथा वक्ष्ये भागमेकञ्च विन्यसेत्
स्कंधतथेतियुकत सार्धभागं तु कारयेत ४०
सार्धभाग समाख्यात भरणो च निबोधयेत्
भरणं च ततो प्राज्ञ सार्ध द्वादश संख्यया ४१
कामरूपट्टिका चैव भागमेकं समुच्छ्रिता
पाद्न चिप्पिका कार्या कर्पापाद्नकद्वय ४२
गौभार्ध घसिका कार्या भागार्धनत् पट्टिका
द्विभिर्भागैस्तत स्कंध कर्ण भागेन कायसेत् ४३
सार्ध भागोच्छ्रितं स्कंध कर्ण सार्ध समुच्छ्रितं
कर्तव्ये चांतरपत्रं द्विभिर्भागै समुच्छ्रितं ४४
एवमेवं हि कर्तव्य भरण सार्ध द्वादश
भागैश्चतुर्दशेश्चैव कपोताली वदाम्यहं ४५
भागार्धे पट्टिका कार्या स्कंध सार्धसमुच्छ्रिता
पट्टियांद्वयं कार्यं भागमेकं समुच्छ्रितं ४६
भागद्वयो छितं स्कंध कर्णसार्धद्विभागक

भागेर्ध चार्ध पट्टिस्तु कर्तव्या नात्र संशय ४७
पंच भागोच्छ्रिते कार्यं अ्रंतरपत्र च शोभन
कपोताली समाशयाता कूटछाद्यं वदाम्यहं ४८
कूटछाद्यं ततो वद्ये भागैचैवतुर्षौऽशौ
कामरूप च कर्तव्य भागपादेन संयुतं ४९
चिप्पिका तत्प्रमाणेन त्रैश्चैव तु भूषित
सार्ध भागोच्छ्रिता कर्ण दंडभागेन मुच्छ्रित ५०
पादोनै कृतभि मार्गैः स्कंध कार्यसुवर्त्तित
पाद्नै घसिका कार्या मागार्धेन तु पट्टिक ५१
सार्धभागोछ्रिताकर्ण स्कंध पादोनक द्व्रय
तस्योर्ध पट्टिका कार्या भागार्धेन तु चौच्छिता ५२
प्रवेशं च कपोतश्च भागायत्वारी नान्यथा
निर्गमं च प्रवद्त्यामि कर्णसूत्रागतःछ्रितं ५३
दशमेकाधिकै भागैः तत्वनातस्य कारयेत्
लंबुना तु द्विधाकृत्यं अ्रग्रभागांगुलीकृत ५४
तरयाग्रे चिप्पिका कार्या मणिबंध तथापरे
कपोताल्य कर्णस्य कारयेच्चापरांदिश ५५
पंचयुक्तानि अ्रधन प्रविशेतु प्रवेशिकं
खल्वणा कारयेत्तत्र कर्णस्योर्ध्व समाबुधः ५६
तस्योर्धपट्टिका कार्या सार्ध भाग समुछ्रता
स्कंध सार्धद्व्रय कार्य भागं नैकेनपट्टिका ५७
शलिलान्तर सप्तभिर्भागैस्तद्वत्प्रवेशनं
कूटछाद्यं भवेदेवं षोडशैस्तु समुछ्रत ५८
गर्भन्यासार्धमुच्छ्रायं गर्भकार्या प्रयत्नत
प्रासादसपाद सार्धमर्धवा अ्रत्युच्चभयकारक ५९
अ्रपूर्ण

इति विश्वकर्माकृते वास्तुविद्यायां वास्तुशास्त्रे प्रासाद
कटयोछ्रियं लक्षणं मंडोवराधिकार अध्याय कमांक ५

श्री विश्वकर्माकृते वास्तुविद्यायां वास्तुशास्त्रे द्वारमानलक्षणाध्याय
क्रमांक ६

श्री विश्वकर्मा उवाच -- द्वार लक्षणं मान प्रमाण
द्वारस्य लक्षणं वत्स कथयामि यथार्थत
एकहस्ते तु प्रासादे द्वारस्यात् षोडशांङ्गुलम् १
षोडशाङ्गुलं वृद्धि पर्यंत चतुर्हस्तकम्
गुणङ्गुका भवेद् वृद्धिर्यावम् वसुहस्तकम् २
अतः ऊर्ध्व द्वयाङ्गलावृद्धि पंचाश हस्तकम्
यं दृष्टा त्रिदशाः सर्वे विस्मय परमंगलः ३
ज्ञातव्यं द्वारमुत्सेधं शिल्पिनेन तु तत्त्वतः ४
पञ्चमांशेन पादेन त्रिभागेन तु कार्यतः
प्रासाद द्वार विस्तारं द्विगुणं तस्य चोछ्रयम् ५
द्वारस्य विस्तरं ज्ञात्वा शाखा लक्षणमब्रवीत्
पञ्च मांशेन हीना च षोडशोना तदर्धतः ६
त्रिभागेन प्रकर्तव्या पादूना वाथ कारयेत्
शाखास्य विस्तरं वत्स एकैकस्य तु प्रकल्पयत् ७
शाखास्य विस्तरं वत्स भागैश्चैव विभञ्जयत्
शाखास्य विस्तरं ज्ञात्वा त्रयोविंशार्ध संयुतैः ८
--- कर्तव्यं तु सदा तज्ञे
--- शिल्पिनिः शास्त्रपारगैः ९
भद्रशाखा तु कर्तव्या भागैश्चतुर्भिरेव च
रूपशाखां द्वयोर्भागा द्वितीया तत्समा भवेत् १०
तृतीया चैव त्रिभागा द्वौभागौ च चतुर्थिका

पत्रशाखां त्रिभिर्भागैरुभयोः पार्श्वयोः समाः ११
बकुली सार्ध भागेन भागं भागं च चिप्पिका
घसिका सुर संयुक्ता वौलिका भगतस्थिताः १२
पत्रशाखा द्विभिर्भागै पट्टिका द्वय संयुता
--- खल्वशाखा च भागतः १३
शाखाश्च पेटकं पुत्र द्वार विस्तार पादतः
उदयं च प्रवक्ष्यामि यथा वदनु पूर्वशः १४
द्वारस्य चोछ्रयं ज्ञात्वा विंशभागैर्विभाजयेत्
दशपञ्च तथा कुर्यात् अतोर्ध्व भञ्जनं शृणु १५
रथिका भद्र शाखास्य भागाश्चत्वारि दापयेत्
निगरं चाष्टभिर्भागैः शेषं चैवोपरिस्थितिम् १६
यस्य पदा देवा प्रतिहारा तस्य कारयेत्
सीमा मधेयदेवान् उपरे तत्र कारयेत् १७
निगरे वामा शाखायां महाकालं तु कारयेत्
दक्षिणे तु स्थितोनन्दी सर्वोपद्रवनाशनः १८
शिवस्याग्रे भवेद् ह्येवं नान्येषां तु सुरालये
निगरस्योपरिष्टा तु शिवरूपाणि कारयेत् १९
त्रिरथिकं च कर्तव्यं चतुर्भि वाथ कारयेत्
उपर्युपरि विन्यस्य रथिका शाखमानतः २०

उत्तरङ्गम्

उत्तरङ्ग च वक्ष्यामि यथोक्तं च स्वयंभुवा
द्वारोच्छ्रयस्य पादून त्रिभागेवाथ चार्धतः २१
उछ्रयं चैव कर्तव्यं कथितेन यथार्थतः
भद्रेषु पल्लवैर्युक्तं भरणेषु विशेषतः २२
मालाधरस्तथायुक्तं मध्यभागे विनायकम्
ग्रहैश्चैव समोपेतं अधिनायक रूपकै

रथिको द्वि द्वि वधेषु भूषितव्यं प्रयत्नतः

उदम्बरम्

उदम्बरो ततो वक्ष्ये उच्छ्रयेण विशेषतः २४
द्वारोच्छ्रयस्य पादेन बाहुल्यो उदुम्बरस्य च
कर्तव्यं सर्वतस्तेवं घटां तस्य समोदयम् २५
द्वारविस्तार त्रिभागेन मध्यकन्द कारयेत्
मृणालेन समायुक्तं पद्मं कुर्यात्ततोपरि २६
पार्श्वयोरुभयोः कार्य ग्रासरूपं सपत्रकम्
धनदं वामदेशे तु दक्षिणे तु विनायकम् २७
युग्मेन सहितं वाथ कर्तव्यं नात्र संशयः
पीठोपरि तु कर्तव्यं मृणालं रूपसंयुतम् २८
मूलनासिक्योर्मध्ये समसूत्रं तु शोभनम्
शाखायां भित्तितुल्यं न न्यूनं न ततोऽधिकम् २९
सीमाधिक्यं हने दृष्टं भृत्यां श्चैवस्तु बान्धवान्
सीमा मध्यगतं वाथ स्वसुतं स्वामीनं हनेत् ३०
ऋजुसूत्रस्य चक्र स्यात् प्रजाहानिस्तदा भवेत्
अज्ञानात्स्थापयेदस्तु शिल्पीन च बुद्धिमान् ३१
निष्कुलं शिल्पीनस्तत्र कारकं मृत्युमाप्नुयान्
अथ शास्त्रप्रभाणेन उभयोरन्तरं चिरम् ३२

अर्धचन्द्रम्

अर्धचन्द्र प्रवक्ष्यामि द्वारविस्तार चार्धतः
कर्तव्यं निर्गमं तस्य न न्यूनं न ततोऽधिकम् ३३
निर्गमस्य च यन्मान द्विगुणं कारयेद्बुधः
त्रिभागेन नगरक उभयोः पार्श्वताः समम् ३४
पद्मं च मध्यतः कुर्यात्ततो वृत्तं समालिखेत्
शङ्खयुग्मं समायुक्तं पद्माकारैः समावृत्तम् ३५

एतत्ते कथितं सर्व निःसन्देह यथार्थतः
अपूर्ण
इति श्री विश्वकर्माकृते वास्तुविद्यायां वास्तुशास्त्रे द्वारमान लक्षणाध्याय क्रमांक ६

श्री विश्वकर्माकृतायां वास्तुविद्यायां वास्तुशास्त्रे क्रमांक अध्याय ७
प्राग्ग्रीवादिमण्डपाः

मण्डपा कथयिष्यामि पूर्वप्रासाद मानतः
समसार्धश्च द्विगुणाज्येष्ठ मध्यकन्यसा १
अनुक्रमेण ते सर्वे पदस्तंभानुपूर्वतः
प्राग्ग्रीवो वर्धमानश्च विजयो भद्रमेव च २
विशालः यज्ञभद्रश्च सुश्लिष्ठोमृत्मर्युदनः
भाग्यं च बुद्धिसंकीर्णः सर्वभद्रो जयावहोः ३
मुक्तकोणो हरिश्चैव मानभद्रो च सुवृत्तः
पुष्पभद्रः सुभद्रश्चैव छत्रं च पद्ममेव च ४
श्रीवत्सश्च धनालयः पुष्पकं पुण्डरीकं च
कौशल्यं च सुरप्रियं सुव्रतं शङ्खनाभकम् ५
सौभाग्यं कुन्दमेव च सूत्रं पूर्णचन्द्रकम्
--- अष्टकोणं तथैव च ६
इत्येतेन समाख्याता त्रयस्त्रिंशति मण्डपाः
प्रासाद विस्तरं कल्पं अग्रे च स्तंभकं द्वयम् ७
स तु प्राग्ग्रीवको नामं मण्डपं प्रथमं स्मृतम्
चतुर्भि च स्तंभमान चतुष्कि वर्धमानम् ८
चतुर्भागे कृते क्षेत्रे अग्रे कुर्याच्चतुष्किका
कर्तव्यो विजयो प्राज्ञः षड्भिः स्तम्भकैर्युतम् ९
तस्य भद्रे पदा त्रीणि दशस्तम्भैस्तु भाजितम्

भद्रं चैव समाख्यातं भद्रभागैक निर्गतम् १०
विशालं तु प्रवक्ष्यामि चतुर्भाग कृते भुवि
द्विषट स्तम्भकैर्युक्तो कथयामि यज्ञभद्रः ११
चतुःक्षेत्रं च प्राग्ग्रीवं भागद्वयं विनिर्गतम्
चतुर्दशयुते स्तंभैर्मण्डपं यज्ञभद्रकम् १२
क्षेत्रे विशाल संज्ञं तु त्रिदिक्षु भद्रकानि च
अष्टादशयुतैः स्तम्भैः सुश्लिष्टो नाम कीर्तितः १३
अष्टाष्टके कृते क्षेत्रे द्विरष्ट स्तम्भकैर्युता
चतुष्किकान्नतामध्ये कर्तव्यो मृत्युमर्दनः १४
क्षेत्रं अष्टाकृति कृत्वा कर्णभाग द्वयं मतम्
भद्रं च तत्समं कुर्यात् भाग्यं च ह्निनयै च ऐ १५
मध्ये चतुष्किकायुक्तं कर्तव्यं बुद्धिसंकीर्णम्
दशधा विभजेत्क्षेत्रे द्विपदं कर्ण विस्तरम् १६
भद्रशाला षडंशेन भागत्रय विनिर्गतम्
सर्वभद्रं चैवोक्तं स्तम्भकै दशचाष्टभिः १७
चतुःस्तम्भयुतं मध्ये मण्डपेस्तु जयावहः
विदिष्टते पदे क्षेत्रे अष्टौकर्ण द्विभागिकौ १८
भद्रकर्ण समं कुर्यात् स्तम्भकै विंशतिर्युतम्
मुक्तकोणं तु कर्तव्यं कक्षस्तम्भा समावृत्तम् १९
प्राग्ग्रीवे निर्गतं च हरिऽष्टाविंशति स्तम्भके
अष्टस्तंभधरैमध्ये मानभद्रः स उच्यते २०
स्तंभकैश्चतुर्त्रिंश तु कर्तव्यं शुभलक्षणम्
अष्टवर्ग कृते क्षेत्रे कर्ण भाग द्वयं मतम् २१
भद्रं द्विपदमेवोक्तं अनुगं भाग संयुतम्
अष्टाविंशधरैर्युक्तो सुवृतो मुनिसत्तमः २२
सर्वाश्चतुष्किका बाह्ये पुष्पभद्रं प्रकीर्तिताः

मध्ये चतुष्कीकार्या चतुस्तम्भ समाकुला २३
अष्टाविंशधरैर्युक्तौ मराडपोयं सुभद्रकः
दिवाकरकृते क्षेत्रे त्रिचतुर्भ्रमंततः
कर्णाद्विपदमेवोक्तं अनुग भागमेव च २४
भद्रं भागचतुष्केन द्विपदं तस्य निर्गमम्
चतुष्कोन्नतं मध्ये अष्टस्तम्भ विभूषितम् २५
तच्छत्रमराडपं प्रोक्तं कर्तव्यं प्रीतिवर्धनम्
चतुस्त्रिंशच्च बाह्ये तु सूत्रये नात्र संशयः २६
चतुर्दश कृते क्षेत्रे भद्रषड्भाग विस्तृतम्
द्विभाग निर्गतं बाह्ये कर्णभागेष्टयं भवेत् २७
सूत्रेष्टांशं जायते स्फुटं स बाह्याभ्यन्तरम्
कुर्यात् विंशधरा --- पद्मे प्रकीर्तिता २८
चतुरश्रं दशधा क्षेत्रे भद्रं भाग यथान्वितम्
निर्गतं भागमेकेन सार्धभागेन चानुगः २९
द्विभाग कर्ण विस्तारं ---
त्रिंशस्तम्भ समायुक्तं श्रीवत्स शुभलक्षणम् ३०
द्विसप्तति कृते क्षेत्रे भद्रं भाग द्वयंमतम्
द्विपदं निर्गमं प्रोक्तं नंदिका भागसंयुता ३१
द्वादश द्विपदा कर्णा नंदिका स्तम्भ संयुता
चतुषष्टि धरैर्युक्तो मराडपो च धनालयः ३२
क्षेत्रे षोडशधा भक्ते द्विपदा कर्ण विस्तरा
शालायां द्विधा प्रोक्ता विस्तरावेन निर्गता ३३
स्तम्भका चतुर्मध्येन अष्टस्यान्तरालये
द्वाविंशति विधा प्रोक्ता पुष्पको नाम सुव्रतो ३४
भू भागे दशधा प्राज्ञः ससूत्रपद संचितै
द्वादशं द्विपदा कर्णा भद्रहीनं चतुर्दिशम् ३५

अष्टस्तम्भान्वितं मध्ये कर्तव्यं चान्नतं शुभम्
षट्त्रिंशति धरैर्युक्तं पुण्डरीकं हरिप्रियम् ३६
षट्चाष्ट कृते क्षेत्रे त्रिपदं कर्ण विस्तरम्
अनुगं द्विपदं ज्ञेयं त्रिगुणं भद्रकं भवेत् ३७
निर्गमं द्विपदं प्रोक्ते मध्यस्तम्भा तु द्वादशः
केचित्तदान्तरे प्रोक्तो चतुः पञ्चाश सङ्ख्यया ३८
मण्डपं कारयेत्प्राज्ञः कौशल्यं च सुखावहम्
द्विरष्ट भाजिते क्षेत्रे कर्णं षड्भागविस्तरम् ३९
चतुर्भागयुतं भद्रं निर्गमं च पदत्रयम्
द्विपदा नेधराका कार्या चत्वारिंश प्रमाणतः ४०
चतुष्किकाकोनविंशो मण्डपो यं सुरप्रियः
क्षेत्रे द्वादशधा भक्ते कर्णं त्रिपदं विस्तरम् ४१
द्विपदा चतुष्की त्रीणि सर्वभद्रेषु कीर्तिता
द्वादशे मध्यदेशे तु षट्त्रिंशद्बाह्यतो धरा ४२
सुव्रतं साममेवोक्तं मण्डपं सर्वकामदम्
चतुषष्टि पदे क्षेत्रे द्विपदं कर्ण विस्तरम् ४३
भद्रभाग चतुष्केन बाहुल्यं निर्गतं तथा
अर्ध सङ्ख्यामिती चोर्ध्व विंश स्तम्भधरैर्युतम् ४४
शङ्खनाभं प्रकर्तव्यं नारायणो अतिप्रियम्
विस्तार भाजिते क्षेत्रे द्विपदं कर्ण विस्तरम् ४५
भद्रभागे चतुष्केन हीनं च निर्गमं सम
मध्ये तु अष्टभिर्भागैः त्रिंशच्चाष्टो तदन्तरे ४६
चत्वारिंशच्चतुर्युक्ता बाह्यतरा प्रकीर्तिता
अशीतिः स्तम्भकैर्युक्तैः मध्ये रङ्गोपशोभितः ४७
सौभाग्यं च समाख्यातं मण्डपं मकरालयम्
भूभागैः षोडशैर्भक्तैः कर्णाद्विपद विंशति ४८

त्रिपदा निर्गता सर्वे भद्रं द्विपद विस्तरम्
निर्गतं च त्रिभागेन मध्ये षोडशभिर्धरै ४९
भद्रान्तरे तथा चाष्टौ षटसप्तति स्तम्भकैः
विंशतिश्च सदा सौम्यं कर्तव्यं कुन्द सम्भवम् ५०
चतुरश्र सप्तधा क्षेत्रे सर्वपदि चतुष्किका
सङ्ख्यया चतुःषष्टी तु चतुरश्र समाश्रुमा ५१
चतुशीति धरैर्युक्तः स सूत्रश्चेति कीर्तितः
सूत्रस्तम्भ चतुःषष्टि वाऽथवा चतुशीति च ५२
क्षेत्रे त्रिमण्डले प्राज्ञः अष्टं संपात संवृत्तम्
त्रिकोण विषमेवोक्तं चतुर्विंशधरैर्युतम् ५३
वृत्तं तु कारयेत् सर्वं पूर्णचन्द्रं तु मण्डपम्
अष्टकोणे कृते क्षेत्रे मध्यकोणानि ज्ञापयेत् ५४
चतुष्की तत्पदे कार्याः चतुरश्राश्चेति कीर्तिता
अष्टकोणं भवेत्प्राज्ञः विंश स्तम्भ समावृत्तः ५५
सर्वे करोटके कार्या तद्लितौ क्षिप्त लंबिका
संवरणोदयमूर्ध्वे तु सूत्र संपाद एव च ५६
केचिद्वेदिकाहीना च गवाक्षा स्तम्भ सखावृत्तः
भद्रालिन्दको केचित् सव्यते सिक्षयतं षट्विधः क्रमात् ५७
प्रमाणो वेदिका कर्णो केचित्स्तम्भं च विस्तरात्
केचित् भित्ति प्रमाणेन विस्तारं मण्डपस्य तु ५८

इति श्री विश्वकर्माकृते वास्तुविद्यायां वास्तुशास्त्रे प्राग्ग्रीवादि मंडपाधिकार क्रमांक अध्याय ७

अथ श्री विश्वकर्माकृते वास्तुविद्यायां शिखरलक्षणाध्याय क्रमांक आध्याय ८

एकस्थापि तलस्योर्ध्वे शिखराणि बहून्यपि

शिखराश्च विविधाकार मनेकांऽकभूषिता १
छाद्योर्ध्वे प्रहारा स्यात् शृंगेशृंगे तथैव च
मूलकर्णस्थादौ च एक द्वित्रिक्रमे न्यसेत् २
निरंधारे मूलभितौ सांधारे भ्रमभित्तिषु
रेखा विस्तार मानेन सपादं तदुच्छ्रय ३
त्रिभाग सहितश्चैव सार्ध्ववातु विचक्षणं
दशधामूल पृथुत्वे षड्भागः स्कंध उच्यते ४
षड्बाह्ये दोषदं प्रोक्त पंचमध्येन शोभनम्
अतोर्ध्वं शिखरं मूले समासान्न तु विस्तरात् ५
चतुरश्री कृते क्षेत्रे दशधा प्रतिभाजितः ६
द्वौ द्वौ भागो तु कर्तव्यौ कोणे कोणे न संशयः
भद्रभाग त्रयं कार्यं सार्धभागं तु चानुगम् ७
व्यासमानं सपादं च उच्छ्रयेण तु कारयेत्
स्कन्धं षड्भागिकं कार्यं तस्यार्धे नवधा भजेत् ८
चतुर्भागायतं कोणं त्रिभिर्भागंस्तु चानुगः
भद्रार्धं तु द्विभिर्भागैस्ततः साधयते कला ९
आदिकोणं द्विधाकृत्वा प्रथमं वेद भाजितम्
द्वितीयं तु त्रिभिर्भागैरेवं सप्तकला भवेत् १०
उदयं चाष्टभिर्भागैः कृत्वा रेखा समालिखेत्
ऊर्ध्व तिर्यक् भागानां भागे भागं तु लाञ्छयेत् ११
एवं सिद्धयेद् रेखा भद्रे कोणे च चानुगे
विषमा भूमिका ज्ञेया पञ्चसप्तनवस्तथा १२
दशमेकाधिका कार्या त्रयोदश तथा परा
पञ्चाधिकं दशै कार्या आघाटैश्चोपल क्षिताः १३
दशभिर्भागे षड्भागे स्कंध विस्तरात्
मूलरेखाः ---

सप्तभागे आमलासारो विस्तारास्यार्धोदये कृतः
प्रतिरथावुभौ मध्येऽमलसारस्य विस्तरम् १४
ततो विस्तरमर्धेन कृत्वा चैव ततोच्छ्रयम्
उच्छ्रयं त्रीणि सार्धानि विभजेत्तदनन्तरम् १५
ग्रीवा पादोन भागेन सपादामलसारकम्
चन्द्रिका भाग पादोन पादोनामलसारिको १६
ग्रीवायासं च विस्तरं आमलसारं सप्तभिश्च
चन्द्रिका पंचमी ज्ञेया त्रिभिस्तु मालसारिका १७
पद्मच्छत्रे तथा पद्मं आमलसारे तथाऽमलम्
कलशे च स्थितो रुद्रो व्योम व्यापि सदाशिव १८
सद्योवामस्तथा घोरं तत्पुरुषीशानमेवः
एतदेवासमाख्याता प्रासादो समाश्रिते
कर्णं प्रतिरथे भद्रे रथे पञ्जरभद्रयोः १९
पञ्चवक्त्रे दिन्तुभद्रे अङ्ग सङ्ख्या प्रशस्यते
एता देवाः समाख्याता प्रासादेषु समाश्रिता २०
मूलरेखास्य मानेन कलशं पंचभागतमं स्याद् द्विभागिकम्
अथवा प्रासादोष्ट भाग कलशविस्तरे तत २१
उच्छ्रये विस्तरे सार्धतुल्य कुर्यान्न संशये
विस्तारो सार्ध उच्छ्रये त्रयभागं च अंडके
आर्ध चतुर्भिर्भाज्येत्सर्वं भागं तस्य परित्यजेत्
भागत्रयमधस्ताच्च भोगे वृत्तं ततोपरि २२
अधोवृत्तं द्विभिर्भागैः भ्रामयेन्नात्र संशयः
एवं तु सिद्धते चाण्डं अधोभागे न संशयः २३
अर्ध भागोच्छ्रिता ग्रीवा अर्धे कर्णं पद्मपत्रिकाम्
कर्तव्यं च द्विभिर्भागैः विस्तारं कर्णयोर्द्वयोः २४
विस्तारं भागमेकेन कण्ठस्यैव तु कारयेत्

मातुलिङ्गं च कर्तव्यं द्विभिर्भागैः समुच्छ्रितम् २५
अधोमेकभागं च ऊर्ध्वे नार्ध विस्तरा
कर्तव्यं सर्वतस्तेवं न न्यूनं न ततोऽधिकम् २६
अतः परं प्रवक्ष्यामि पुरुषं विन्यसेद्यथा २७
न्यसेत् देवालयेन चतुर्वर्गफलं लभेत्
छाद्यनोपप्रदेशे तु शृङ्गमध्येऽथ चोपरि २८
शुकनासावसाने तु विधुवद्वेदयाभूमिकान्तरे
मध्यगर्भे विद्यातव्यो हृदावरण को विधिः २९
पुंसस्तुर्य मय तत्र सर्वतः पुटिते न्यसेत्
कलशाधृतोपूर्ण परिपर्यकोर्धस्थापने
शयी तस्यामि निप्रस्थ पद्मं च दक्षिणे करे ३०
त्रिपताकं करे वामे कारये हृदि संस्थितम्
प्रमाणं यास्य वक्ष्यामि प्रासादो चैक हस्तके ३१
अर्धमङ्गुल सङ्ख्या च कर्तव्यो नात्र संशयः
अर्धाङ्गुला भवेद् वृद्धिर्यावत् पंचाश हस्तकं ३२
हेमजे रनरजे वापि ताम्रजे वापि भागशः
कलश आज्ञपूर्णे तु सौवर्णं पुरुषं क्षिपेत् ३३
स्थिरः अध्मनि विन्यस्तं अधोधं मध्यमाधमम्
पूज्य वास्त्वगारे शोध्यन मन्त्रस्याभि मन्त्रयेत् ३४
अतो रेखां प्रवक्ष्यामि सङ्ख्यया पञ्चविंशतिः
सच्या सा शोभना भद्रा सुरूपा सुमनोहरा ३५
शुभा चैव तथा शान्ता कौबेरी च सरस्वती
कोला च कलवीरा च कुमुदा पद्मिनी तथा ३६
कनका विकटा चैव रम्या च रमणी तथा
वसुंधरा तथा हंसी विशाखा नंदिनी भवेत् ३७
जया च विजया चैव सुमुखा च प्रियानना

इत्येतानि च रेखाणि सङ्ख्यायां पञ्चविंशतिः ३८

ध्वजलक्षणाधिकारः

को ध्वजो ध्वजमित्या रोहणं च कीदशम्
निरंधारे किं प्रमाणं च कथं वा तस्य कल्पना ३९
श्री विश्वकर्मा उवाच
ध्वजानुरोहणं वक्ष्ये कृते येन फलं लभेत्
सुदृढं विषमं पर्व ध्वजं वंशं परीक्षयेत् ४०
---
अनुगोपरि संस्थाप्य ध्वज तु दक्षिणां दिशम् ४१
पश्चिमा मुखाकार्या प्रासाद पुरभूषणः
इशान्यांदिशिमाश्रित्य ध्वजादण्ड निवेशनम् ४२
पूर्वमुखे तु प्रासादे दृष्टव्या सुरवल्लभा
नैऋृत्यां तु प्रकर्तव्यां ध्वजादण्ड निवेशनम् ४३
दक्षिणाभिमुखं कार्य प्रासाद कीर्तिसम्भवा
वायव्या चानुगे दिक्षु ध्वजादण्ड निवेशनम् ४४
उत्तराभिमुखं वत्स प्रासादे तत्र कारयेत्
वायव्ये चानुगे तस्य ध्वजादण्ड निवेशनम् ४५
मूलगर्भस्य यन्मानं दक्षिणा दिशमाश्रितम्
अनुगस्योपरि कार्यं ध्वजादण्ड निवेशनम् ४६
प्रासादस्यनुयद्वारं प्राचीस्था तत्र कल्पयेत्
पृष्ठश्चानुगे दिक्षु दृष्टव्य ध्वजलक्षणम् ४७
दिशायां बिदिशायां च प्रासादमुखकल्पना
पृष्ठश्चानुगे दिक्षे दृष्टव्यं ध्वजलक्षणम् ४८
मेरु शृङ्गे तु प्रासादे भद्रको गेतु चानुगे
मूलप्रासादमानेन ध्वजादण्ड निवेशनम् ४९
चतुर्मुखं ततो वत्स प्रासादं सर्वकामदम्

ईशान्यां दिशमाश्रित्य ध्वजादण्ड निवेशनम् ५०
तोरणेन तथा चैव शुकनासे बलानके
मूलप्रासाद मानेन ध्वजादण्ड निवेशयेत् ५१
पूरे ग्रामे नगरे च दुर्ग यत्रा नियोजयेत्
ध्वजस्य नियमो नास्ति सर्वतोमुख शोभना ५२
अत्रतिष्ठे ध्वजाकार्या जलाश्रयं तत्र शोधयेत्
दक्षिणां दिशमाश्रित्य दृष्टव्यं ध्वजलक्षणम् ५३
गिरिदोष हिते वत्स प्रासादे न च मन्दिरे
स्थानानैव प्रकर्तव्या इत्युक्तं च स्वयंभुवा ५४
पञ्चगव्य समायुक्तं पञ्चवर्ण च संयुतम्
प्लावधे तत्र मध्यस्थे तत्रकार्य समाचरेत् ५५
विजयश्च शक्तिरूपं च सुप्रभं तु जयावहम्
पञ्चमं विश्वरूपं च प्रमाणं तस्य कल्पयेत् ५६

ध्वजदंडदीर्घमान

प्रासादे कटि विस्तारे चतुष्की स्तम्भ विस्तरात्
गर्मभित्ति समंदैर्घ्यं क्वचित् कर्ण प्रविस्तरम् ५७
विभक्ते चैव प्रासादे शिखरं विस्तर तत्समम्
ध्वजवंशस्य दीर्घत्वं मया प्रोक्तं मतान्तरे ५८
ज्येष्ठे च मध्यमे चैव कन्यसे च प्रकल्पयेत्
त्रिपर्वं च जयं नाम शक्तिरूपं च पञ्चभिः ५९
सुप्रभं सप्तपर्वं तु नवपर्वं जयावह
विश्वरूपं द्विरूपं तु बहुपर्वं समन्वितम् ६०
वंशमयो च कर्तव्यः सारदारु समन्वितः

ध्वजदंडकाष्ट

शिशवं खदिरं चैव अञ्जन मधुकं तथा ६१
दृढदारु शुभं कार्यं ग्रन्थिकोटर वर्जितम्

